गिरिरसवसुसङ्ख्याब्दे शकसमये मार्गशीर्षमासे च ।
कृष्णत्रयोदशदिने भृगुवारे मैत्रनक्षत्रे ॥ ७५

धनुषि रवौ घटलग्ने द्वादशवर्षे तु जन्मनः पट्टम् ।
योधादुदयगिरीन्द्रे रविरिव लोकानुरागाय ॥ ७६

यस्मिन् शासति नृपतौ परिपक्वानेकसस्यसम्पच्छालिः ।
सततपयोधेनुरभीर्निरीतिरपरुग्निरस्तचोरो देशः ॥ ७७

यो रूपेण मनोजं विभवेन महेन्द्रमहिमकरमुरुमहसा ।
हरमरिपुरहननेन न्यक्कुर्वन् भाति विदितदिगवनिकीर्तिः ॥ ७८

स सकलरिपुनृपतिमकुटतटघटितमणिगणमधुकरनिकरपरि - चुम्बितचरणसरसिरुहयुगलो युगलोचनपदकमलविलसद्विरेफायमानो मानोन्नतानतोद्धतसमस्तलोकः समस्तभुवनाश्रयश्रीविजयादित्यमहाराजाधिराजः परमेश्वरः परमभट्टारकः परमब्रह्मण्यः क्ष्मां पञ्चविंशतिवर्षाण्यपात् ॥

जगति प्रथितं धरामराणां चरणं वाजसनेयमस्ति भूयः ।
श्रुतिचोदितधर्मयुक्तं वरयोगीश्वरयाज्ञवल्क्यगृह्यम् ॥ ७९

तत्राभवद्भरद्वाजगोत्रः पात्रं द्विजोत्तमः ।
कल्वटोरुनिवास्तव्यो नाम्ना पालियपेद्दियः ॥ ८०

तस्यापि गुण्डशर्मासीत्सूनुरूनेतरः प्रभुः ।
गुणी घृणी धनी दानी मानी मानवपूजितः ॥ ८१

तस्याभवत्पण्डियनामधेयः सतां विधेयो नुतरूपधेयः ।
पुत्रो यमत्रस्तमनाः पवित्रत्रयीसमाचारविचारनिष्ठः ॥ ८२

तस्मै स्वपादाराधनतत्पराय ब्रह्मचारिणे कर्पटिकाय पेन्नातवाडिविषये पडङ्कलूरुनामा ग्रामः सर्वकरपरिहारमग्रहारीकृत्य सोमग्रहणनिमित्तं तेन राज्ञा दत्तः । अपि च । पट्टवर्धिन्याः पम्मवाख्यायाः सुताय युवराजबल्लालदेववेलाभटाय बोदियनाम्ने गुद्रवाडविषये पाम्बरुनामग्रामस्य दक्षिणस्यां दिशि क्षेत्रद्वयं अम्मराजो राजमहेन्द्रो दत्तवान् । किं च ।

विद्वत्कवीन्द्रप्रभवं प्रसिद्धं पूज्योदयं भूरिगुणाधिवासम् ।
धर्मिष्ठभूमिर्नियमस्वधाम पात्रं परं काश्यपगोत्रमासीत् ॥ ८३

तत्र भूसुरयथोचितविद्याकर्मषट्कविधिनिर्मलदेहः ।
वेदविद्विदितशास्त्रसमूहो विद्मय्य इति विश्रुतकीर्तिः ॥ ८४

भूदेववंशाम्बुधिशीतरश्मिर्विद्वत्सरोजाकरभानुभानुः ।
तत्सूनुरम्भोजभवोपमानो विद्यामयो विद्मियप्रसिद्धः ॥ ८५

अरुन्धत्या विशिष्टस्य वसिष्ठस्योपमामयात् ।
पतिव्रतात्मया धर्मपत्न्या यश्चानमव्वया ॥ ८६

कुलक्रमायातमुदारभावमनन्यदृष्टाश्रुतपूर्वरूपम् ।
दधद्धराधारिधरोपमानस्तयोः सुतः कोरमियाभिधानः ॥ ८७

श्रीलोकमहादेव्या समवर्ध्यत यस्तदम्बया प्रीत्या ।
चातुर्यनागरकयोरावासस्थानमिति मनोहरयोः ॥ ८८

अपहसति वाग्मिता वाग्वनितां यत्र स्थिता महाचतुरे ।
असुजनधारानागरकजलजभवबहुमुखप्रियां सततम् ॥ ८९

उत्पद्यते प्रसङ्गात्सुजनतया चात्मसहजया यस्य ।
विभवः पतिप्रशंस्यश्चित्रमिदं साधुवाद इति ॥ ९०

रसिकानामतिरसिकश्चतुराणामधिकचतुर एवायम् ।
कोरमियनामधेयो विदुषामत्यन्तविज्ञानी ॥ ९१

सेवितसमस्तभूपतिहृदयस्थितिभाग्गुणोपपन्नोऽमूल्यः ।
मुक्ताफलसच्चरितः कोरमियो वास्तुपुरुष इत्युपपन्नम् ॥ ९२

अनागतज्ञानविवेकिनी धीरनिन्द्यचारित्रपरा हि चेष्टा ।
अशेषभोगोपगतं मनश्च अहो महत्कोरमियस्य पुण्यम् ॥ ९३

तस्मै कोरमियनाम्ने सुवर्णभाण्डागारश्रीकरणमुख्याय एलवरु-नामग्रामः सर्वकरपरिहारेणाग्रहारीकृत्योदकपूर्वमुत्तरायणनिमित्ते तेनाम्मराजेन दत्तः ।

अपि च—

सत्यस्य जन्मभूमिः सज्जनसंसेवितः सरोनाथः ।
विक्रमगुणैकधामा नृपकामः पूजितेशपदकमलः ॥ ९४

रूपलावण्यसौभाग्यसत्यधर्मपरायणा ।
नायमाम्बाङ्गना तस्य सरोरुहदलेक्षणा ॥ ९५

ताभ्यां स्वश्वशुरश्वश्रूभ्यां प्रार्थ्यमानः सोऽम्मराजः कल्लूरु-ग्रामवास्तव्यभारद्वाजगोत्रवाजसनेयवामनभट्टपौत्राय सिव्वनभट्टपुत्राय

वामनशर्मणे गुण्डुगोलनुनामग्रामे पूर्वदिशि राजमानेन द्वादशखोण्डिकोद्रवबीजवापक्षेत्रमुदकपूर्वमुत्तरायणनिमित्ते सर्वकरपरिहारेण शासनीकृत्य ददौ ।

द्वैमातुरोऽम्मराजस्य दानार्णव इति स्मृतः ।
चतुःषष्टिकलाभिज्ञः समास्तिस्रोऽभुनग्भुवम् ॥ ९६

ततः परं पतिं लब्धुमनुरूपमनायिका ।
सप्तविंशति वर्षाणि चचारेव तपः क्षमा ॥ ९७

अथ दानार्णवाज्जातः कलावान्मृदुभिः करैः ।
राजा चालुक्यचन्द्रो यः क्षमातापमपाकरोत् ॥ ९८

सत्ये प्रतिष्ठिता लोका इति सत्यं वचो यतः ।
सर्वलोकाश्रये यस्मिन्सत्यराजे स्थितं जगत् ॥ ९९

निर्वक्रं वसुधाचक्रमरक्षत्क्षपिताहितः ।
न्याय्ये पथि नृपैराद्यैः स द्वादशसमाः समः ॥ १००

विमलादित्यदेवाख्यस्ततस्तस्यानुजोऽदधत् ।
महीमण्डलसाम्राज्यं विजित्य विजयी रिपून् ॥ १०१

यस्य प्रज्वलितं प्रतापदहनं सोढुं न शक्ता भया-
द्गत्वा काननमम्बुधिं च तरसा विद्वेषिणो विह्वलाः ।
दावौर्वाग्निपदेन तत्र च पुनस्तेनैव सन्तापिताः
श्रीपादामरपादपस्य महतीं छायां समाशिश्रियन् ॥ १०२

अपि च ।

सूर्यान्वये सुरपतिप्रतिमः प्रभावैः
श्रीराजराज इति यो जगति व्यराजत् ।
नाथः समस्तनरनाथकिरीटकोटि-
रत्नप्रभापटलपाटलपादपीठः ॥ १०३

जातस्ततस्ततयशोजितराजतेजा
राजेन्द्रचोडनृपतिर्नृपचक्रवर्ती ।
दम्बं (?) प्रचण्डमददन्तिकपोलनिर्य-
द्दानाविलामरसरित्सलिलप्रवाहः । १०४

सद्वीपां चतुरम्बुराशिपरिखां विश्वम्भरां लीलया
दण्डेनैव विजित्य च प्रतिदिशं योऽतिष्ठिपत्सर्वतः ।
स्वैरोद्भ्रान्तिनिवारणाय विजयस्तम्भान्स्वनामाङ्किता-
नालानानिव बन्द्धुमन्धमनसो दर्पेण दिग्दन्तिनः ॥ १०५

तस्यानुजां सुरूपामनुरूपां कुन्दवां महादेवीम् ।
स उपायत कृतकृत्यो विमलादित्यो जनस्तुत्यः ॥ १०६

समुद्ररशनां पृथ्वीं पृथ्वीं स भुजविक्रमात् ।
समरक्षत्समाः सप्त सप्तसप्तिसमः समः ॥ १०७

तस्माच्चालुक्यचूडामणिरथ विमलादित्यदेवान्महीशः
चोडक्ष्मापाललक्ष्म्या इव रचिततनोः कुन्दवायाश्च देव्याः ।

जातः श्रीराजराजो रजनिकरकुलश्रीमदम्भोधिराजो
राजद्राजन्यसेव्यामभृत भुजबलाद्राजलक्ष्मीं पृथिव्याः ॥

यो रूपेण मनोभवं विशदया कान्त्या कलानां निधिं
भोगेनापि पुरन्दरं विपुलया लक्ष्म्या च लक्ष्मीधरम् ।
भीमं भीमभुजाबलेन (?) विहसन्भाति स्म भास्वद्यशाः
श्रीमत्सोमकुलैकभूषणमणिर्दानैकचिन्तामणिः ॥ १०९

यो रक्षितुं वसुमतीं शकवत्सरेषु
वेदाम्बुराशिनिधिवर्तिषु सिंहगेऽर्के ।
कृष्णद्वितीयदिवसोत्तरभद्रिकायां
वारे गुरोर्वणिजि लग्नवरेऽभिषिक्तः ॥ ११०

यस्योत्तमाङ्गं पट्टेन समबन्धि महीयसा ।
भर्तुं विश्वम्भराभारं जनैरारोपितं चिरम् ॥ १११

पृथ्वीमिमां यत्र पृथुप्रभावे रक्षत्यवर्गं क्षपितारिवर्गे ।
दूरीकृतावग्रहचोररोगाः प्रजा लभन्ते सफलं त्रिवर्गम् ॥ ११२

शौर्यौदार्याभिमानाद्यगणितगुणजन्मानुरक्ता महिम्ना
प्रख्यातेनातिकृष्णा शशधरधवला सज्जनानां गणेन ।
पीता प्रीतेन कर्णाञ्जलिभिरभिनवा भाति दिग्देवतानां
नानावर्णा वितानश्रियमतनुतरा तन्वती यस्य कीर्तिः ॥

पित्रोर्वंशगुरू बभूवतुरलं यस्य स्फुरत्तेजसौ
सूर्याचन्द्रमसौ निरस्ततमसौ देवौ जगच्चक्षुषी ।

दंष्ट्राकोटिसमुद्धृताखिलमहीचक्रं महत्क्रीडया
विष्णोरादिवराहरूपमभवद्यच्छासने लाञ्छनम् ॥ ११४

स सर्वलोकाश्रयश्रीविष्णुवर्धनमहाराजाधिराजपरमेश्वरपरमभट्टारक परमब्रह्मण्यः मातापितृपादानुध्यातः त्यागसिंहासनासीनः चण्डिका प्रसादपरिलब्धसाम्राज्यचिह्नः ॥

आद्यन्तात्यन्तदूरात्समजनि जगतां ज्योतिषो जन्महेतुः
ब्रह्मा धाम प्रजानामभवदथ ततः कश्यपो नाम वेधाः ।
भारद्वाजस्ततोऽभून्मुनिरधिकतपास्तस्य गोत्रे पवित्रे
तत्रापस्तम्बसूत्रे श्रुतिनिधिरुदगाच्चीडमार्यः क्रमेण ॥ ११५

राज्ञामर्चितवर्चसः समुदितैर्यज्ञैर्विधौतांहसो
यज्ञो नाम सुतस्ततः कृतधियो यज्ञे कृतज्ञः कृती ।
विज्ञाताखिलवेदशास्त्रसमयः प्राज्ञः सदा पोषित-
ज्ञातिर्ज्ञाननिधिर्गुरुज्ञसदृशो नीतिज्ञतायां भुवि ॥ ११६

यथा वसिष्ठो विदुषां वरिष्ठो निरुन्धतीं दोषमरुन्धतीं सः ।
तथानुरूपामभिरूपरूपः सतीमुपायच्छत माकवाख्याम् ॥ ११७

पुत्रस्तयोरदितिकश्यपयोरिवाभू-
द्भास्वानपाकृततमाः खलु चीडमार्यः ।
यो वेदशास्त्रसकलश्रुतिरश्मिजातैः
शिष्याननाम्बुरुहबोधकरो गरीयान् ॥ ११८

नित्याभीष्टफलप्रदानरुचिरं लक्ष्मीनिवासास्पदं
विभ्राणं गुरुतां प्रबुद्धसुमनः सम्पूर्णशाखान्वितम् ।
छायासन्ततिमाश्रितैश्च विबुधैः संस्तूयमानं सदा
सेवित्वा सुखमास्यते द्विजवरैर्यं विप्रकल्पद्रुमम् ॥ ११९

यद्गेहं सुचिरं विभाति पठतां पुण्यैर्वटूनां पटु-
व्यावृत्त्याविरतं क्रमात्क्षमपदे सामर्थ्यमुद्घोषणैः ।
सायं प्रातरुपाहिता हुतिहुतस्वाहाप्रियप्रोज्वल-
द्दामैश्चापि समन्ततः कलिमलं प्रोत्सारयद्दूरतः ॥ १२०

तस्मै समस्तजनताविशेषकाय रैःसुतर्पितमहीदेवदेवगणाय विप्रान्वयाब्धिशशभृत्प्रतिच्छन्दाय विद्वज्जनाङ्गीकृतविश्रुतानन्दाय जन्मप्रभृतिगीतवेदार्थतत्त्वाय सन्मनोवसतिवास्तव्यात्मसत्त्वाय लम्भितसरलत्वपरिलालितचरित्राय शुम्भितमतिस्वसितजीवभृशपुत्राय सिद्धनिजनाथकृतिसेवितमनीषाय शुद्धमतिदूषितसमस्तजनदोषाय सन्ततारधितनिजस्वामिपादाय चिन्तितमनःस्थसुखदाभूतसुपादाय होमधूमविनिर्गतामितकलङ्काय धीमत्प्रगीतरुचिरस्थिरस्वनामाङ्काय सकलमुनिगणनुतापस्तम्बसूत्राय तत्रसङ्गीतभारद्वाजगोत्राय सप्ततन्तुकृतयूपस्तम्भशोभाय सप्ताश्वरूपसदृशात्मतनुलाभाय नित्यजनतोचितसुसत्यगुणयुक्ताय प्रत्यभिलषितकार्यनिष्पत्तिसक्ताय परमपुरुषार्थसम्पादनपटिष्ठाय परमेश्वरस्मरणपालनवरिष्ठाय सकलार्थशास्त्रपरिनिश्चितविनोदाय सुकुमारताधिकसरोजनिभपादाय धाराकरेणाग्रहारीकृतः कोरुमेल्लिनामा ग्राम इन्दूपरागे दत्तः । स राजराजनरेन्द्रः—

चत्वारिंशतमब्दानेकं च पुनर्महीमपालयदखिलाम् ॥ १२१

राजासावनुरूपरूपविभवामम्मङ्गनाम्ना भुवि
प्रख्यातामुपयच्छत स्म विधिवद्देवीं जगत्पावनीम् ।
या जह्नोरिव जाह्नवीं हिमवतो गौरीव लक्ष्मीरिव
क्षीरोदाद्दिवसेशवंशतिलकाद्राजेन्द्रचोडादभूत् ॥ १२२

पुत्रस्तयोरभवदप्रतिघातशक्ति-
निःशेषितारिनिवहो महनीयकीर्तिः ।
गङ्गाधराद्रिसुतयोरिव कार्तिकेयो
राजेन्द्रचोड इति राजकुलप्रदीपः ॥ १२३

भासामुन्नतिहेतुं प्रथमं वेङ्गीश्वरत्वमध्यास्य ।
यस्तेजसा दिगन्तानाक्रमति सहस्रभानुरुदयमिव ॥ १२४

उद्यच्चण्डतरप्रतापदहनप्लुष्टाखिलद्वेषिणा
सर्वान्केरलपाण्ड्यकुन्तलमुखान्निर्जित्य देशान्बलात् ।
आज्ञां मौलिषु भूभृतां भयरुजा चित्तेषु दुर्मेधसां
प्रीतिः सत्सु दिशासु कीर्तिरतुला येनार्पितो जृम्भते ॥१२५

भोगीशाभीलभोगप्रतिमनिजभुजाभर्त्सितात्यन्तबिभ्य-
न्नानाभूपाललोकप्रहितबहुविधानर्घरत्नाभिरामम् ।
धत्ते मौलिं परार्ध्यां महति नृपकुले यः कुलोत्तुङ्गदेवो
देवेन्द्रत्वादनूने सुरपतिमहिमा चोडराज्येऽभिषिक्तः ॥ १२६

उदयमिव रविस्त्वं प्राप्य वेङ्गीश्वरत्वं
वितनु शिरसि पादं भूभृतामित्यवोचत् ॥ १३४

इत्याशिषं समुपगम्य नृपादवन्ध्यां
मातुस्तदग्रजनृपद्वितयात्क्रमेण ।
आनम्य तामवरजैः प्रणतः कुमारः
सृष्टः स्वदेशगमनाय स तैः कथंचित् ॥ १३५

शत्रुध्वान्तमपास्य राजनिकरानाच्छाद्य धाम्ना परान्
दुर्वृत्तान्विनिवर्त्य भूकमलिनीं कृत्वा तथा नन्दिनीम् ।
प्रारूढो जननाथनामनगरी हर्म्योदयाद्रिर्विभुः
वेङ्गीभूतलभूषणं नृपसुतो बालार्कबिम्बद्युतिः ॥ १३६

शाकाब्दे शशिखाम्बरेन्दुगणिते सिंहाधिरूढे रवौ
चन्द्रे वृद्धिमति त्रयोदशतिथौ वारे गुरोर्वृश्चिके ।
लग्नेऽथ श्रवणे समस्तजगतीराज्याभिषिक्तो मुदे
लोकस्योद्वहति स्म पट्टमनघः श्रीवीरचोडो नृपः ॥ १३७

यो दीनकोटिमभिवाञ्छितवस्तुदानै-
र्भीतानुपाश्रितभयापनुदा भुजेन ।
रक्षन्समस्तभुवनाश्रयनाम सार्धं
धत्ते प्रजाश्च निजधर्मपरिग्रहेण ॥ १३८

भूलोकादुदिता महोन्नतिमती दिङ्मण्डलव्यापिनी
सङ्क्रान्ताखिलसत्पथा परिगता लोकानथोर्ध्वानपि ।

सन्मार्गाच्चलितां भुवीह पतितां पश्चादधोगामिनीं
गङ्गां कीर्तिरमङ्गलप्रमथिनी यस्यातिशेतेतराम् ॥ १३९

त्यक्त्वा भूभारखेदं फणिपतिरचलं पाति पाताललोकं
सर्वा निर्व्याकुलासीत्परकुपतिपरित्यागिनी मेदिनी च ।
लक्ष्मीभाजां द्विजानामपि मखनिवहैर्नन्दितं देवबृन्दै-
रित्थं त्रैलोक्यमेतद्ध्रुवमतिमुदितं यत्र भूभारभाजि ॥ १४०

अक्षतां यो महीं रक्षन्गुरुणा चक्रवर्तिना ।
आहूतो यौवनोद्दामदेहालक्ष्मीदिदृक्षया ॥ १४१

कान्तिं नवामनुदिनं नयनाभिरामां
पुष्णन्तमिन्दुमिव यं तरुणं नृपेन्द्रः ।
पश्यन्नतृप्तनयनोऽप्यथ पञ्चमाब्दे
प्रास्थापयत्पुनरुदीच्यजयाय सूनुम् ॥ १४२

स सर्वलोकाश्रयः श्रीविष्णुवर्धनमहाराजाधिराजो राजपरमेश्वरः परमभट्टारकः परमब्रह्मण्यः श्रीवीरचोडदेवः—

पावने ब्रह्मवंशेऽभूत्परमाह्लाददर्शनः ।
मुनीन्द्रो मुद्गलो नाम क्षीरोद इव चन्द्रमाः ॥ १४३

येनातर्क्यानुभावेन समाहूते दिवाकरे ।
यस्य यष्टिः समादिष्टा रविचेष्टामचेष्टत ॥ १४४

आसीत्पवित्रचारित्रस्तद्गोत्रे गोत्रवर्धनः ।
दिशो निजयशोधाम्ना द्योतयन्पोतनाह्वयः ॥ १४५

गुणाधिको गुणज्ञेन राजराजाधिपेन यः ।
राजराजब्रह्ममहाराजनाम्ना स्तुतो मुदा ॥ १४६

तस्य पुण्यनिधेः पत्नी कन्नमाम्बा जगन्नुता ।
अत्रेरिवानसूयासीदनसूयगुणोन्नता ॥ १४७

सुतमिव वसुदेवाद्देवकी वासुदेवं
गुहमिव गिरिकन्या नन्दनं चन्द्रमौलेः ।
अथ तनयमसूत श्रीनिधिं सा च तस्मा-
दखिलविबुधसङ्घैरीडितं मेडमार्यम् ॥ १४८

उद्दामधामविमलीकृतदिग्विभागे
नित्योदयस्थितिमति प्रविकासिपद्मे ।
यत्रोदिते निखिलबन्धुकुलानि लक्ष्मी-
रध्यास्त वारिजवनानि विवस्वतीव ॥ १४९

यस्मिन्नाश्रितवत्सले कृतयुगाचारैकधीरे स्थितिं
बिभ्राणा गुणरत्नभूषण इति प्रख्यातनाम्नि स्वयम् ।
सत्यत्यागपराक्रमप्रभृतयः संभूय सर्वे गुणा
वर्धन्ते गुणराशिलोपनिपुणं निर्जित्य कालं कलिम् ॥ १५०

धीरो नित्यानुरक्तो दृढनिशितमतिर्ब्रह्मवंशप्रदीपो
लक्ष्मीभूरिद्धतेजा नयविनयनिधिः शास्त्रशस्त्रप्रवीणः ।
मान्यः शैलेन्द्रसारस्थिर इति च मया सादरं सप्रसादं
सैनापत्येऽभिषिक्तो वहति जनमुदे पट्टमारोपितं यः ॥ १५१

शुश्रूषया गुरुजनं चरितेन लोकं
मानेन बन्धुजनमिष्टधनेन शिष्टान् ।
यो माम्मदीयनिखिलक्षितिराज्यभार-
क्षान्त्याभिनन्दयति भक्तिभरेण शौरिम् ॥ १५२

यस्य प्राङ्गणभूमिषु प्रतिदिनं प्रक्षाल्यमानामित-
क्षोणीदेवसमूहपादविगलद्वारिप्रवाहैः शुभैः ।
शश्वन्मार्गसहस्रपूरिभिरहो गङ्गाप्रवाहा जिता
देवेष्वन्यतमस्य पादगलिता मार्गत्रयायासिताः ॥ १५३

द्राक्षारामे पावने पुण्यभाजा पुण्यक्षेत्रे पीठपुर्यां च येन ।
भोक्तुं प्रीत्या प्रत्यहं ब्राह्मणानामाकल्पान्तं कल्पितं सत्त्रयुग्मम् ॥
चेल्लूरुनामप्रथिताभिरामाशिष्टाग्रहारोत्तरदिग्विभागे ।
महत्तटाकं मधुराम्बुपूर्णमचीकरद्यः करुणारसात्मा ॥ १५५

विप्रैरगस्त्यप्रतिमैरसंख्यैर्नित्योपभोग्येन शशिप्रभेण ।
यद्वारिणाब्धिं हसतीव भूयो निःशेषपीतं कलशोद्भवेन ॥ १५६

महौजसा तेन महामहिम्ना ग्रामस्य तस्यापरदिग्विभागे ।
निर्मापितं धर्मपरायणेन विष्णोर्गृहं वैष्णवपुङ्गवेन ॥ १५७

समुन्नते चन्द्रमरीचिगौरे लक्ष्मीनिवासे नयनाभिरामे ।
तत्राविरासीत्स्वयमेव देवो लक्ष्मीपतिर्लक्षितशङ्खचक्रः ॥ १५८

तस्मै श्रीविष्णुभट्टारकाय प्रत्यहं चरुबलिपूजार्थं खण्डस्फुटितनवकर्मार्थं च भवद्विषये कोलारू नाम ग्रामः सर्वकरपरिहारेण देवभोगीकृत्य उदकपूर्वकमदात् श्रीविजयराज्यसंवत्सरे एकविंशे ।

अपि च—

वेदानां परिरक्षणे कृतमतिर्देवादिदेवस्तप-
स्तप्त्वा सञ्जनयाम्बभूव भगवान्......ब्राह्मणान् ।
यैराश्चर्यमहानुभावभवनैरग्नौ यथा चोदितं
सायं प्रातरिहार्पितेन हविषा जीवन्ति देवा दिवि ॥ १५९

दुष्टो जात्या प्रकृत्या कलुषितहृदयः क्रूरकर्मापि येषा-
मेकं विप्रं प्रसाद्य प्रशमितदुरितः स्वर्गमाप्तास्त्रिशङ्कुः ।
राज्ञां वंशे विराजन्बहुसुकृतबलाद्देवराज्येऽभिषिक्तो
येषामेकस्य कोपात्प्रभुरपि नहुषः पातितो नाकलोकात् ॥

आज्ञाविधेयानि भवन्ति यस्य
जगन्ति सर्वाणि स चन्द्रमौलिः ।
विधाय येषां विधिवत्सपर्यां
त्रिलोकनाथस्त्रिपुरं विजिग्ये ॥ १६१

येषां प्रभावेण सहस्रधामा रक्षांसि सन्ध्याद्वितये विधूय ।
विभाति निर्विघ्नवियत्प्रचारो जगन्ति रक्षञ्जगदेकचक्षुः ॥ १६२

वंशेषु तेषां ऋषिपुङ्गवानां विख्यातभूदेवकुलोत्तमेषु ।
प्रशस्तवाक्याः शुभलक्षणाङ्गा ये भान्ति वेदा इव मूर्तिमन्तः ॥

ये वाङ्मयाम्भोनिधिसारतत्त्वज्ञानोज्ज्वलत्कौस्तुभरत्नभासा ।
कृतप्रकाशं हृदयं दधाना विभान्ति विष्णोरिव मूर्तिवेदाः ॥

तेभ्यः षट्त्रिंशदुत्तरपञ्चशतसंख्येभ्यः षट्कर्मनिरतेभ्यो न्यूनाधिकभावेन चतुश्चत्वारिंशदधिकपञ्चशतसंख्यान्भागान्परिकल्प्य भवद्विषये द्वादशपूण्डिसहितमालवेल्लिनामग्रामः पोन्नतो......... नामग्रामश्च उत्तरवरुसविषये आलमिनामग्रामश्चेति ग्रामत्रयमेकीकृत्य श्रीवीरचोडचतुर्वेदिमङ्गलनाम्ना सुप्रतिष्ठाग्रहारीकृत्य प्रतिसंवत्सरमत्र प्रतिभागं सार्धं निष्कं करं परिकल्प्य यदतोऽन्यत्सिद्धाया वेण्डायाभिनवादिकं यच्च क्रोड......शुक्लनामकं यच्च वणिग्भ्यः पूर्णोपजीविभ्यश्च राजग्राह्यं तत्सर्वं परिहृत्य सर्वकरपरिहारेण धारापूर्वकमाचन्द्रार्कमुत्तरायणनिमित्ते ददौ श्रीविजयराज्यसंवत्सरे त्र्युत्तरविंशतिसंवत्सरे । अत्र व्याकरणं व्याचक्षाणस्य वृत्त्यर्थं भाग एकः मीमांसाव्याख्यात्रे द्वौ वेदान्तं व्याख्यातुरेकः ऋग्वेदमध्यापयितुरेकः यजुर्वेदमध्यापयितुरेकः सामानि गापयितुरेकः रूपावतारं व्याचक्षाणस्यैकः पुराणं वाचयितुरेकः वैद्यस्यैकः अम्बष्ठस्यैकः विषवादिन एकः ज्योतिर्विद एकः इति गुणवृत्तिभागा द्वादश । ग्राममध्यमधिवसते विष्णुभट्टारकाय भागौ द्वौ पश्चिमं दिग्भागमधिवसते च द्वौ श्रीकैलासदेवाय द्वौ इतराभ्यो वसुदेवताभ्यः एकः इति सप्त देवभागाः ॥

स कुलोत्तुङ्गचोडदेवः एकोनपञ्चाशद्वर्षाणि क्षितिमन्वरक्षत् । तज्ज्येष्ठसुतो विक्रमचोडः पञ्चदशाब्दान्भुवमन्वपालयत् । तत्पुत्रे

श्रीकुलोत्तुङ्गचोडदेवे राज्यं प्रशासति तद्वंशराजप्रसादलब्धनानादेश-परिवृतं परम्परागतमण्डलेशाधिष्ठितं वेङ्गीमण्डले महासरः स्थिरत-रमस्ति ।

तत्रासीत्सरसीपुरीति जलधौ विष्णोः पुरीं द्वारका-
मुद्यल्लावणवारिदोषकलुषां न्यक्कुर्वती यानिशम् ।
मातेव स्वपयःप्रवाहनिवहैः सुस्वादुभिः सादरं
स्वाङ्कं संश्रितमण्डलेश्वरमहीचक्रं स्वयं रक्षति ॥ १६५

गर्वाद्यद्विजिगीषया रिपुगणाः सम्प्राप्य वेलातलं
लोलत्स्यन्दनवाजिवारणभटा जेतुं न शक्ताः पुनः ।
युद्धालोकनलोलवैरिललनासोल्लासहासोदया-
लज्जावद्वदनाः प्रविश्य सरसीं यान्त्येकतां कर्दमैः ॥ १६६

तस्याः पतिः कोलनिकाटमनायकोऽभू-
त्प्रख्यातधर्मनिचयः प्रततोरुकीर्तिः ।
स्फूर्जत्स्वबाहुबलनिर्जितवैरिवर्गः
सर्वाश्रयो नयनिधिर्भुवि सत्यसन्धः ॥ १६७

यो धर्मे धर्मपुत्रप्रतिनिधिरवनित्राणने कार्तवीर्यः
प्रायः शौर्ये किरीटी स्फुटमहिमरुचा तुल्य एव प्रतापे ।
औदार्ये कर्णकल्पः स्मर इव वपुषि क्ष्मासदृक्षः क्षमायां
सौजन्ये यस्य लोके कथमपि सदृशो विक्रमादित्य एव ॥

योऽदृश्यत सतां भूत्यै जलदुर्गे श्रिया सह ।
भुवनत्रितयं भासा भासयन्व्योम चन्द्रवत् ॥ १६९

यः सर्वामवनिमरक्षदक्षतश्रीः सेनाभिर्बहुरणकेलिनिर्जितारिः ।
वीरश्रीवदनविलासदर्पणाभो नीतिज्ञो नियमितवागतिप्रगल्भः ॥

द्विजजनपरिरक्षादक्षमक्षय्यलक्ष्मीं
प्रशमितरिपुपक्षं कांक्षिणां कल्पवृक्षम् ।
गुणमणिगणकुम्भाकल्पमाकल्पमुर्व्यां
धृततनुमिव धर्मं मन्वते मानवा यम् ॥ १७१

सुधृता येन धरित्री निःशङ्कं निर्जितारिवर्गेण ।
चिरतरकालं कृतिना कृतयुगवच्छ्रीसमृद्धेयम् ॥ १७२

विदुषां बहवो ग्रामा देवानां भूरिहर्म्याणि ।
जलपरिपूर्णतटाका देशे देशे विनिर्मिता येन ॥ १७३

यस्मिन्काङ्क्षाबहुलं ददति द्रव्यं प्रभूतमर्थिभ्यः ।
उपपदरहिता जाताश्चिन्तामणिकामधेनुकल्पागाः ॥ १७४

यस्यासिधारासुनिपीतमम्बु द्विषच्छिरश्छेदनकर्महेतु ।
प्रवर्तुलं वैरिपुरं त्रिनेत्रेष्वश्रुच्छलेनेव कृतस्वकार्यम् ॥ १७५

यत्खड्गहस्तपरिपातमदान्धमत्त-
मातङ्गमस्तकविनिर्गतमौक्तिकौघैः ।
संयत्यरातिनिकरान्हसतीव नाना-
दिक्कं पलायनपरान्महती जयश्रीः ॥ १७६

कीर्तिर्यस्य मनोहरा त्रिभुवनं विभ्राजयन्ती भृशं
स्वच्छासत्कुमुदाकरप्रियकरी दिङ्मण्डलं तन्वती ।
कुर्वाणापि सदा समस्तजगतां हर्षं द्विषद्योषितां
वक्त्राम्भोजसुदुःसहा विजयते ज्योत्स्नेव शीतद्युतेः ॥ १७७

स स्वामिनश्चोडदेवस्य तस्य प्राप्य प्रसादादथ ग्रामवर्यम् ।
लक्ष्मीपतीशप्रसादाप्तलक्ष्मीर्दातुं द्विजेभ्यो धियं सन्दधार ॥ १७८

ततश्च—

शाकाब्दानां प्रमाणे रसविशिखवियच्चन्द्रसङ्ख्यां प्रयाते
देशे सावत्तिलीति क्षितितलविदिते पोण्डुवग्रामयुक्तम् ।
सार्द्रर्क्षे पूर्वपक्षे विषुवति सुतिथौ मण्डदोरग्रहारं
प्रादाद्विद्वद्द्विजेभ्यः स्थिरतरमकरं काटदण्डाधिनाथः ॥ १७९

तथैतद्ग्रामसीमान्तर्वर्त्तिनो ये कुटुम्बिनः ।
विट्छूद्रतक्षरजककर्मारतिलपूतकाः ॥ १८०

सुवर्णकंसचर्मास्त्रकुम्भकाराश्च नापिताः ।
अजगोपालकाश्चैव चण्डालाद्यास्तथापरे ॥ १८१

तैर्देयकरमप्येभ्यो ब्राह्मणेभ्योऽददात्तदा ॥ १८२



Printed by V. Ramaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.

# GENEALOGY OF THE CHALUKYA KINGS.



E.—A grant apparently from Mattewada in the Kistna district, Madras Presidency.
Ind. Ant. vii. p. 191.

5. MANGI-YUVARAJA.

25 years. A.D. 672 to 695.

F.—A grant from an unknown place.
Ind. Ant. xx. p. 104.

6. JAYASIMHA (*Jayasimha II*)

13 years. A.D. 696 to 709.

7. KOKKILI

6 months. A.D. 709.

8. VISHNUVARDHANA (*Vishnuvardhana III*)

37 years. A.D. 709 to 746.

9. VIJAYADITYA (*Vijayaditya I*)

18 years. A.D. 746 to 764.

10. VISHNUVARDHANA (*Vishnuvardhana IV*)

36 years. A.D. 764 to 799.

11. NARENDRA-MRIGARAJA. (*Vijayaditya II*)

44 years. A.D. 799 to 843.

G.—A grant from an unknown locality.
South Ind. Inscrip. i. p. 31.

H.—A grant from Idara in the Kistna district, Madras Presidency.
Ind. Ant. xiii p. 55 = PLM. 77.*

* PLM. = Prachina-lekha-mala.

12. KALI-VISHNUVARDHANA (*Vishnuvardhana V*)

$1\frac{1}{2}$ years. A.D. 843 to 844.

I.—A grant from Ahadanakaram in the Madras Presy.
Ind. Ant. xiii p. 185.

13. GUNAGA-VIJAYADITYA (*Vijayaditya III*)

44 years. A.D. 844 to 888.

J.—A grant from an unknown locality.

14. CHALUKYA-BHIMA (*Bhima I*)

30 years. A.D. 888 to 918.

15. KOLLIBHAGANDA-VIJAYADITYA (*Vijayaditya IV*)

6 months. A.D. 918.

16. AMMA-RAJA (*Amma I*; *Vishnuvardhana VI*)

7 years. A.D. 918 to 925.

K.—A grant from Masulipatam in the Kistna district.
Ind. Ant. viii. p. 76.

L.—A grant from Idara in the Kistna district
Ind. Ant. xiii p. 50 = PLM. 53
South Ind. Inscrip. i. p. 36.

17. VIJAYADITYA (*Vijayaditya V*)

15 days. A.D. 925

18. TADAPA

1 month. A.D. 925.

19. VIKRAMADITYA

11 months. A.D. 925 to 926.

20. BHIMA (*Bhima II*)

8 months A.D. 926 to 927.

21. YUDDHAMALLA

7 years. A.D. 927 to 934.

22. RAJA-BHIMA (*Bhima III*; *Vishnuvardhana VII*)
12 years. A.D. 934 to 945.

M.—A grant from Paganavaram in the Madras Presidency.

Ind. Ant. xiii. p. 213.

N.—A grant from apparently Masulipatam in the Kistna Dist.

O.—A grant from Kolavennu in the Kistna district.
South Ind. Inscrip. i. p. 43.

23. AMMA RAJA (*Amma II*; *Vijayaditya VI*)
25 years. A.D. 945 to 970.

P.—A grant from an unknown locality.
Ind. Ant. vii. p. 15.

Q.—A grant from Masulipatam in the Kistna district.
Ind. Ant. viii. p. 73.

R.—A grant from Yelivarru in the Kistna district.
Ind. Ant. xii. p. 91 = PLM. 68.

S.—A grant from an unknown locality.

Ind. Ant. xiii. p. 248.

T.—A grant from Masulipatam in the Kistna District.
South Ind. Inscrip. i. p. 46.

U.—A grant from an unknown locality.

24. DANARNAVA

3 years. A.D. 970 to 973.

Interregnum of 27 years. A.D. 973 to 1003.

25. SAKTIVARMAN

12 years. A.D. 1003 to 1015.

26. VIMALADITYA

7 years A.D. 1015 to 1022.

27. RAJARAJA-NARENDRA(*Rajaraja I*; *Vishnuvardhana VIII*)
41. years. A.D. 1022 to 1063.

V.—A copper-plate grant from Korumelli in the Godavery District, Madras Presidency.
Ind. Ant. xiv. p. 48 = PLM. 35.

28. RAJENDRACHOLA—KULOTTUNGACHOLA(*Kullotunga-chola I*)

49 year. A.D. 1063 to 1112.

29. VIKRAMACHOLA

15 years. A.D. 1112 to 1127.

RAJARAJA (*Rajaraja II*)

VIRACHOLA (*Vishnuvardhana IX*)

W.—A grant from Chelluri in the Godavery District.
Ind. Ant. xix. p. 423 = PLM. 52.
South Ind. Inscrip. i. p. 49.

W. a.—A grant from Pithapuram in the Godavery Dt.
Ep. Indica V. p. 74 = PLM. 154.

30. KULOTTUNGACHOLA (*Kulottungachola II*)
Date of Accession A.D. 1127.

X.—A grant from Chellur in the Godavery District.
Ind. Ant. xiv. p. 55 = PLM. 36.

---

PULIKESIN (*Pulikesin II*) *Satyasraya.*

Y.—An inscription from Aihole in the Kaladgi District, Bombay Presidency.

Ind. Ant. V. p. 67 = PLM. 16.

*Z.*—A grant from an unknown locality.
Ep. Indica iii. 51 = PLM. 151.

---

ment in Ganga grants which connects their real with their Puranic genealogy. The foundations for this portion of the genealogy are the facts that the Chalukyas did come orginally from the north and found the Pallavas in possession of some of the territories afterwards acquired by themselves, coupled with the Kadamba tradition that the founder of that family was Trinetra or Trilochana.

**P. 3, l. 11.** With the mountain, Chalukyagiri, we may compare the Nandagiri fort which, according to the Kakatiya legend, was founded by Nanda, the son of Uttungabhuja. Nanda's father, in a similar manner came from Upper India and settled to the south of the Godavary. In a similar fashion, the mountain, Mahendragiri—in this case a really existing mountain—is introduced into the traditions of the Gangas of Kalinga.

**P. 3, l. 12.** These are the Eastern Chalukya insignia. They are : the white umbrella, the single conch-shell, the *panchamahasabda*, the *paliketana*, the double drum, the boar-crest, the bunch of feathers of a peacock's tail, the spear, the throne, the *makaratorana*, the golden sceptre, the Ganga and the Yamuna, and others which are not particularised. A somewhat similar list of insignia is given in the case of the Gangas of Kalinganagara. The terms Ganga and Yamuna probably denote the images of two Goddesses as personifications of the rivers. These were also Rashtrakuta insignia. These two emblems must have been derived by some means or another, from the early Guptas, in the temples of whose period the

Ganga and the Yamuna, as goddesses, constantly appear as an architectural embellishment.

**P. 3, l. 20**. Vishnuvardhana became famous afterwards as Jayasimha.

**P. 4, l. 1.** Ranaraga was also known as Vijayadityat Ranaraga was, perhaps, a title. His mother was of Pallava descent, cf. **तस्यासीद्विजयादित्यो विष्णुवर्धनभूपतेः । पह्लवान्वयजातायां महादेव्याश्च नन्दनः ॥**

**P. 4, l. 4.** The town Vatapi has not been correctly localised. Perhaps it is the same as the modern Badami, the well-known remains at which are quite enough to show that it was in former times a place of much importance.

**P. 4, l. 7.** The Nalas were perhaps the rulers of the district known as Nalavadi in the Bombay Presidency ; or perhaps a portion of the Kalinga country, including probably the Berars. The Mauryas were evidently the rulers of North Konkana and the Kadambas ruled over the western parts of Belgaum and Dharwar districts and eastern part of North Kanara district. The Kadamba King defeated by Kirtivarman was probably Krishnavarman II.

**P. 4, l. 16.** Kalacchuri was the Haihaya family ruling in Gujarat and Malwa.

**P. 4, l. 18.** Revatidvipa is identified with modern Redi in the Ratnagiri district in the Bombay Presidency.

**P. 5, l. 18.** The Vanavasi fort on the banks of the Varada river in the North Kanara district of the Bombay Presidency was the capital of the Kadambas.

**P. 6, l. 14.** The greatest achievement of Pulikesin is his defeat of Harsha, the paramount sovereign of Northern India. This victory, mentioned also by Hiuen Tsiang, is made much of in the inscriptions of his successors and Pulikesin, after the defeat of Harsha, assumed the title of Parameswara.

**P. 7, l. 4.** Kosala or rather south Kosala might be the south-east portion of the Central Provinces between the Mahanadi and the Godavary. Kalinga is no dout the south-east portion of Orissa, of which the capital was Kalinganagara or modern Mukhalingam.

**P. 7, l. 5.** Pishtapuram is modern Pithapnr in the Godavary district.

**P. 7, l. 14.** The Pallava King of Kanchi (modern Conjeevaram) defeated by Pulikesin was Mahendravarman, son of Simhavarman.

**P. 8, l. 5ff.** The date of the inscription is given here. 3735 of the Era of the Great Battle and 556 of the Saka Era. It corresponds to 634—35 of the Christian Era.

**P. 8, l. 12.** The reading in the inscription is रविकीर्त्तिनेदम्.

**P. 9, l. 1.** The missing letter may be च.

**P. 9, l. 8.** *Vishamasiddhi* is a title which is explained as being due to his achieving " success (*siddhi*)

against fortresses, difficult of access (*vishama*) on the plains, in the water, in the woods and on the hills." Read *sthalajalavana* for *sthalajanavana* in the text.

**P. 9, l. 13.** He is also called Kubja-Vishnuvardhana. The word Kubja means 'hump-backed;' it also means 'a curved sword, a scimitar.' Puki is not identified; perhaps Pudi, seven miles south west of Chipurupalli.

**P. 9, l. 14.** Charupura is, perhaps, an older form of the name Chipurupalli.

**P. 9, l. 19.** Dimili is in the Sarvasiddhi taluq, fourteen miles towards south-east from Chipurupalli. Kalavakonda is, perhaps, Konda-kirla of the present day.

**P. 9, l. 19.** The year denotes the regnal year of Vishnuvardhana I. The Saka year is 555. The date of the grant is 7th July 632 A.D.

**P. 10, l. 7.** Gudrahara is perhaps modern Gudivada in the Kistna district. • Gudivada is the name of two villages in the Vizagapatam district also. The language of this grant is rather full of inaccuracies and Mr. Fleet was not quite satisfied as to its authenticity.

**P. 10, l. 8.** This is the regnal year of Jayasimha I. The Saka year is 582(=660—661 A.D.)

**P. 10, l. 14.** His name occurs also as Indraraja

**P. 11, l. 1.** This is the regnal year of Vishnuvardhana. The corresponding Saka year is 586. The date of the grant is 13th March 664 A.D.

**P 11, l. 3.** The names of the Brahmans and their portions are specified in the grant.

**P. 11, l. 8.** This is again the regnal year. The Saka year is 589. The date of the grant is 17th February 668 A.D.

**P. 11, l. 18.** This is the regnal year of the King. The corresponding Saka year is 614.

**P. 13, l. 8.** The name of the Vishaya in which the village was situated is illegible. The charter was issued by Vijayaditya II. himself, but the Dutaka of the grant was Prince Nripa-Rudra who was described as a brother of Vijayaditya II. but as a descendant of the Haihaya race. He appears, therefore, to have been a half-brother, born from a different wife, of Vishnuvardhana IV. who belonged to the lineage of the Kalachuris of Tripura.

**P. 13, l. 14.** Ratta is the Prakrit form of Rashtra in the Sanskrit word, Rashtrakuta.

**P. 14, l. 1.** The prefix Kali is explained in the following line, by saying that he was "skilled in fighting with all weapons" (**समस्तानामायुधानां कलौ कृती**). But Fleet says it is the Dravidian word *Kali* and explains it as 'a courageous, valiant man; a hero.' We are not quite sure that this is a genuine grant. It seems to have been left unfinished. The grant purports to be of Vishnuvardhana but there is nothing in it to enable us to say whether it is to be allotted to Vishnuvardhana IV. or V.

**P. 14, l. 14.** This Vijayaditya is known also as Gunaka-, Gunaga-, Gunaganka- or Gunake-Nalla-Vijayaditya. The prefix is explained in one grant by saying that he was a thorough Arithmetician (*ankakaras sakshat*).

**P. 14, l. 15ff.** "Challenged by the lord of the Rattas, he conquered the unequalled Gangas, cut off the head of Mangi in battle and frightened the firebrand Krishna and completely burnt his city." The killing of Mangi and the burning of the city of Krishna are also spoken of in another grant and a reference to the former event is also made in the grant of Vijayaditya III. himself. The Krishna in question must be the Rashtrakuta king, Krishna II. and the city must be Malkhed.

**P. 14, l. 20.** The usurpation of the sovereignty by some Ratta chiefs for a period not defined, is specially to be noted. Bhima's opponent is specifically stated to be Krishnavallabha *i.e.* Krishna II. in another grant

**P. 15, l. 8.** A grant of Ammaraja states that he ruled over the Vengimandala together with the forests of Trikalinga or the three Kalingas.

**P. 15, l. 15.** Amma's name is also given as Amba. Rajamahendra is a title of Amma. The title suggests that Rajahmundry was first occupied by Eastern Chalukyas under Amma and was renamed after him.

**P. 15, l. 16.** Amma seems to have used his sword against some feudatory relatives who had joined the party of his natural adversaries and won over to himself the

subjects and the army of his father and his grandfather. This intimates that some of the members of his family had entered into an unsuccessful conspiracy with the Rashtrakutas to prevent his accession.

**P. 16, l. 6.** The family of Pattavardhani was very loyal during the days of Kubja-Vishnuvardhana.

**P. 16, l. 19.** Gonturu is perhaps the modern Guntur, the capital of the district of the same name.

**P. 17, l. 9.** Drujjuru is perhaps the present, Dzuzzuru, a village lying north of the Krishna, about 9 miles from the river and 19 miles north-west of Bezwada.

**P. 17, l. 11.** His name occurs also as Kollabiganda or Kollabiganda-Vijayaditya. One grant names him simply as Kollabiganda and Kollabigandabhaskara ; another states that he was Vijayaditya who was also named king Kollabiganda.

**P. 17, l. 13.** The other forms of the name are Taha, Talapa, Tala and Talapa. One grant states that he ruled over the Vengimandala and Trikalinga.

**P. 17, l. 18.** Malla is also called Yuddhamalla ; cf. ततस्तालपराजस्य सूनुः सूनृतवाक्प्रभुः । युद्धमल्लधराधीशः सप्तवर्षाण्यपाद्भुवम् ॥

**P. 19, l. 13.** Lokamahadevi is the Queen of Bhima II.

**P. 20, l. 1 ff.** These lines give the date of the coronation of Amma II. The corresponding date of the Christian era is Friday, 5th December 945.

**P. 21, l. 19.** The grant reads योऽस्मदन्वया for यस्तदन्वया

**P. 22, l. 11.** The head of the writing department of the treasury of gold.

**P. 22 ll. 16, 18.** Kama and Nayamamba are the parents of the Queen of Amma II.

**P. 23, l. 4.** Danarnava is also styled as Dananripa.

**P. 23, l. 6 f.** This period has been assumed to have been a time of anarchy, with the suggestion that the anarchy may be fairly attributed to Chola invasions. The country may have been conquered and held for a time by the Cholas. The period is twice distinctly specified as 27 years. Nevertheless, as Dr. E. Hultzsch has pointed out, if the lengths of the immediately preceding and following reigns—two on either side—are stated correctly, this period must have extended to 30 years. This is determined by the actual dates of coronation recorded for Amma II and Rajaraja I. And this period can be limited to 27 years only if we assume that the coronation of Rajaraja I was deferred for three years after his actual accession, which does not appear very probable.

**P. 23, l. 11.** Satyaraja is another name of Saktivarman.

**P. 25, l. 7 ff.** These lines give the date of coronation of Rajaraja I. The corresponding date according to the Christian Era is Thursday, 16th August 1022.

**P. 27, l. 20** Perhaps the present village of the same name in the Godavery district where the grant was discovered.

**P. 29, l. 9.** Kulottunga-Chodadeva I was first anointed, like his ancestors, to the sovereignty of Vengi in 1063; but subsequently he assumed the Chola crown and had Vengi governed for him by Viceroys. He acquired the Chola crown by hostile invasion and conquest, not at any rate entirely by a failure of the Chola succession. He annexed the Chola kingdom in the very first year of his reign. It is clear from the poem, *Vikramankadevacharita* that Kulottunga Choladeva I was enabled to seize the Chola crown through internal disturbances in the Chola kingdom which culminated in the death of the last Chola king; cf. Note from the *Vikramankadevacharita* at the end. This record names three Viceroys of Vengi appointed by Kulottunga Choladeva I.

**P. 30, l. 11 ff.** Herein is found recorded the date of installation of Virachola. It corresponds to Thursday, 23rd August 1078 of the Christian Era.

**P. 33, l. 11.** This is of course the modern village of Chellur.

**P. 34, l. 2.** This appears to be the modern Kalairoo, two miles south-west of Chellur.

**P. 34, l. 3.** This is the regnal year of Virachola. The corresponding year according to the Christian Era is 1098.

**P. 38, l. 8.** The date of the grant is given here. The corresponding date according to the Christian Era appears to be 23rd March 1132.

Chalukyas, it is doubtless to his time that we must refer the defeat of the people of Kalyana, and the defeat of the Kuntalas at Kudal-sangam—*i. e.* in both cases, of the Western Chalukyas. The most interesting, however, of the events between Vikramaditya VI and the Cholas occurred, according to the poem, after the death of Someswara I and the accession of Someswara II. Vikramaditya VI was then contemplating another campaign against the Cholas. The Chola king, feeling himself unable to resist, sent an ambassador asking for friendship and offering his daughter's hand in marriage to the Chalukya king. By an amicable arrangement, Vikramaditya VI retired to the Tungabhadra ; and there the marriage was celebrated. Hardly was this done, when the Chola king died and the kingdom fell into a state of anarchy. Vikramaditya VI proceeded at once to Kanchi and subdued the rebels there ; next he visited Gangakunda again and secured the Chola succession for his wife's brother ; and then after a further stay of a month at Kanchi, he returned to the Tungabhadra. Within a few days, however, after his return, the news reached him that his brother-in-law had lost his life in a fresh rebellion and Rajiga, the lord of Vengi, had taken possession of the throne of Kanchi. Vikramaditya VI marched at once against Rajiga. The latter induced Vikramaditya's brother to combine with him and a battle was fought. But the victory rested with Vikramaditya VI and Rajiga fled and the former's brother was taken prisoner. This los Vikramaditya's brother the throne ; and shortly afterwards,

according to the poem, Vikramaditya VI allowed himself to be proclaimed ruler of the Dekkhan.

Subsequently to this, the Cholas are mentioned again in a passage which says that after a variety of wars against unnamed enemies, Vikramaditya once more had to extinguish the Chola. Whether this refers to the Eastern Chalukyas, as holders of the Chola crown, or to an attempt on the part of the real Cholas to reassert themselves, is not apparent. This event is placed just before the entrance of Vikramaditya VI into his capital of Kalyana.

Subsequently to this, the Cholas were attacked only once more; after a long time of peace, they again became proud and insolent; Vikramaditya's army marched on Kanchi and took the city; and Vikramaditya amused himself there for some time, before returning to his capital. Here the expression "the Cholas" seems to denote really "the Eastern Chalukyas."

---